**ब्राह्मणः पात्रतां याति क्षत्रियो विजयी भवेत् ।**
**वैश्यश्च धान्यधनवानस्य शास्त्रस्य धारणात् ॥ ३३३ ॥**

इत्थमूर्ध्वैः श्लोकैः सामश्रवःप्रभृतयोऽनेकधा प्रार्थयन्तेस्म ॥३३०॥३३१॥३३२॥३३३॥

अपरामपि प्रार्थनामाह

**य इदं श्रावयेद्विद्वान्द्विजान्पर्वसु पर्वसु ।** ५
**अश्वमेधफलं तस्य तद्भवाननुमन्यताम् ॥ ३३४ ॥**

यस्त्विदं धर्मशास्त्रं प्रतिपर्व द्विजान् श्रावयेत् तस्याश्वमेधफलं भवेदिति श्रावणविध्यर्थवादः । तदेतदस्मत्प्रार्थितमर्थं सर्वत्र भवाननुमन्यताम् ॥ ३३४ ॥

वरदानमाह

**श्रुत्वैतद्याज्ञवल्क्योऽपि प्रीतात्मा मुनिभाषितम् ।** १०
**'एवमस्त्विति' होवाच नमस्कृत्य स्वयंभुवे ॥ ३३५ ॥**

एतदृषिभिर्भाषितं श्रुत्वा **योगीन्द्रो**ऽपि स्वनिर्मितधर्मशास्त्रधारणादिफलप्रार्थनोन्मीलित-मुखपङ्कजः स्वयंभुवे ब्रह्मणे नमस्कृत्य प्रणम्य 'भवत्प्रार्थितं सकलमित्थं भवत्वि'त्येवं किल भगवान्बभाषे ॥ ३३५ ॥

इति श्रीभारद्वाज**पद्मनाभभट्टो**पाध्यायात्मजस्य श्रीमत्परमहंसपरिव्राजक**विज्ञानेश्वर**भट्टारकस्य १५ कृतौ ऋजुमिताक्षरायां **याज्ञवल्क्य**धर्मशास्त्रविवृतौ प्रायश्चित्ताध्यायस्तृतीयः समाप्तिमगमत् ॥

अथात्राध्यायानुक्रमणिका लिख्यते । तत्राद्यं सूतकप्रकरणम् १ । आपद्धर्मप्रकरणम् २ । वान-प्रस्थप्रकरणम् ३ । अध्यात्मप्रकरणम् ४ । ततः प्रायश्चित्तप्रकरणम् ५ । तत्रादौ कर्मविपाकः ६ । महापातकादिनिमित्तपरिगणनम् ७ । महापातकप्रायश्चित्तान्यातिदेशिकसहितानि ८ । उपपातकप्राय-श्चित्तानि ९ । प्रकीर्णकप्रायश्चित्तप्रकरणम् १० । पतितत्यागविधिः ११ । व्रतग्रहणविधिः १२ । २० रहस्यप्रायश्चित्ताधिकारः १३ । कृच्छ्रादिलक्षणम् १४ । इति प्रकरणानि ॥

**उत्तमोप**पदस्येयं शिष्यस्य कृतिरात्मनः । धर्मशास्त्रस्य विवृति**र्विज्ञानेश्वर**योगिनः ॥ १ ॥
इति **याज्ञवल्क्यमु**निशास्त्रगता विवृतिर्न कस्य विहिता विदुषः ।
प्रमिताक्षराऽपि विपुलार्थवती परिषिञ्चति श्रवणयोरमृतम् ॥ २ ॥
गम्भीराभिः प्रसन्नाभिर्वाग्भिर्न्यस्ता **मिताक्षरा** । अनल्पार्थाभिरल्पाभिर्विवृतिर्विहिता मया ॥३॥ २५

नासीदस्ति भविष्यति क्षितितले **कल्याण**कल्पं पुरं
नो दृष्टः श्रुत एव वा क्षितिपतिः **श्रीविक्रमार्को**पमः ।
**विज्ञानेश्वर**पण्डितो न भजते किंचान्यदन्योपम-
श्चाकल्पं स्थिरमस्तु कल्पलतिकाकल्पं तदेतत्त्रयम् ॥ ४ ॥

स्रष्टा वाचां मधुरवपुषां विद्वदाश्चर्यसीम्नां
  दातार्थानामनिशयजुषामर्थिसार्थार्थनायाः ।
ध्याता मूर्तेर्मुरविजयिनो जीवतादाऽर्कचन्द्रं
  जेताऽरीणां तनुरुहभुवां तत्त्वविज्ञाननाथः ॥ ५ ॥

५ आ सेतोः कीर्तिराशे रघुकुलतिलकस्या च शैलाधिराजात्
  आ च प्रत्यक्पयोधेश्चटुलतिमिकुलोत्तुङ्गरिङ्गत्तरङ्गात् ।
आ च प्राचः समुद्रान्नतनृपतिशिरोरत्नभाभासुराङ्घ्रिः
  पायादा चन्द्रतारं जगदिदमखिलं **विक्रमादित्यदेवः** ॥ ६ ॥

अन्तर्मुखानि यदि खानि तपस्ततः किं
१० नान्तर्मुखानि यदि खानि तपस्ततः किम् ।
अन्तर्बहिर्यदि हरिश्च तपस्ततः किं
नान्तर्बहिर्यद् हरिश्च तपस्ततः किम् ॥ ७ ॥

**॥ श्रीमज्जगदीश्वरार्पणमस्तु ॥ शुभं भवतु ॥**

# याज्ञवल्क्यस्मृतिपद्यानां वर्णानुक्रमः।

# एतत्पुस्तकोद्धृतऋषिवचनानां सूची ।